# श्रीश्रीकृष्णलीलास्तवः

Śrī Kṛṣṇa-līlā-stavaḥ

In Praise of Kṛṣṇa's Sport

Version 0.1

## श्रीसनातनगोस्वामिविरचितः

by Sanātana Gosvāmin

June 5, 2002

# Chapter 1

# The Text

श्रीकृष्णाय नमः

श्रीकृष्णस्य कथासूत्रं यथाभागवतक्रमं ।
लिख्यतेऽष्टोत्तरशतप्रणामानन्दसिद्धये॥ १॥

ब्रह्मब्रह्मन्नमामि त्वामात्मन्नन्दीश्वरेश्वर ।
नानावतारकृत् कृष्ण मधुरानन्दपूरद॥ २॥ (नमः १)

जय कृष्ण परब्रह्मन् जगत्तत्त्व जगन्मय ।
अद्वैत सच्चिदानन्द स्वप्रकाशाखिलाश्रय ॥ ३ ॥

निर्विकारापरिच्छिन्न निर्विशेष निरञ्जन ।
अव्यक्त सत्य सन्मात्र परम ज्योतिरक्षर॥ ४॥ (नमः २)

परमात्मन् वासुदेव प्रधानपुरुषेश्वर ।
सर्वज्ञानक्रियाशक्तिदात्रे तुभ्यं नमो नमः॥ ५॥

हृत्पद्मकर्णिकावास गोपाल पुरुषोत्तम ।

नारायण हृषीकेश नमोऽन्तर्यामिनेऽस्तु ते॥ ६॥ (नमः ३)

परमेश्वर लक्ष्मीश सच्चिदानन्दविग्रह ।
सर्वसल्लक्षणोपेत नित्यनूतनयौवन ॥ ७ ॥

सर्वाङ्गसुन्दर स्निग्धघनश्यामाब्जलोचन ।
पीताम्बर सदा स्मेरमुखपद्म नमोऽस्तु ते ॥ ८ ॥

परमाश्चर्यसौन्दर्य माधुर्यजितभूषण ।
सदा कृपास्निग्धदृष्टे जय भूषणभूषण ॥ ९ ॥

कन्दर्पकोटिलावण्य सूर्यकोटि महाद्योते ।
कोटीन्दुजगदानन्दिन् श्रीमद्वैकुण्ठनायक ॥ १० ॥

शङ्खपद्मगदाचक्रविलसच्छ्रीचतुर्भुज ।
शेषादिपार्षदोपास्य श्रीमद्गरुडवाहन ॥ ११ ॥

स्वानुरूपपरीवार सर्वसद्गुणसेवित ।
भगवन् हृद्वचोऽतीत महामहिमपूरित ॥ १२ ॥

दीननाथैकशरण हीनार्थाधिकसाधक ।
समस्तदुर्गतित्रातर् वाञ्छातीतफलप्रद ॥ १३ ॥ (नमः ४)

सर्वावतारबीजाय नमस्ते त्रिगुणात्मने ।
ब्रह्मणे सृष्टिकर्त्रेऽथ संहर्त्रे शिवरूपिणे ॥ १४ ॥

भक्तेच्छापूरणव्यग्र शुद्धसत्त्वघन प्रभो ।
वन्दे देवाधिदेवं त्वां कृपालो विश्वपालक ॥ १५ ॥

सर्वधर्मस्थापकाय सर्वाधर्मविनाशिने ।

सर्वासुरविनाशाय महाविष्णो नमोऽस्तुते ॥ १६ ॥

नानामधुररूपाय नानामधुरवासिने ।
नानामधुरलीलाय नानासंज्ञाय ते नमः ॥ १७ ॥ (नमः ५)

श्रीचतुःसनरूपाय तुभ्यं श्रीनारदात्मने ।
श्रीवराःआय यज्ञाय कपिलाय नमो नमः ॥ १८ ॥

दत्तात्रेय नमस्तुभ्यं नरनारायणौ भजे ।
हे हयग्रीव हे हंस ध्रुवप्रिय नमोऽस्तु ते ॥ १९ ॥

पृथुं त्वामृषभञ्चैव वन्दे स्वायम्भुवेऽन्तरे ।
द्वितीये विभुनामानं तृतीये सत्यसेनकम् ॥ २० ॥

चतुर्थे श्रीहरिं वन्दे वैकुण्ठं पञ्चमे तथा ।
षष्ठेऽजितं महामीनं शेषं च धरणीधरम् ॥ २१ ॥

श्रीनृसिंहञ्च कूर्मञ्च सधन्वन्तरिमोहिनीं ।
सप्तमे वामनं वन्दे नमः परशुराम ते ॥ २२ ॥

श्रीरामचन्द्र हे व्यास नमस्ते श्रीहलायुध ।
हे बुद्ध कल्किन् मां पाहि प्रपन्नाशनिपञ्जर ॥ २३ ॥ (नमः ६)

अष्टमे सार्वभौमस्त्वमृषभो नवमे भवान् ।
विष्वक्सेनश्च दशमे धर्मसेतुस्ततःपरम् ॥ २४ ॥

सुधामा द्वादशे भावी योगेशस्तु त्रयोदशे ।
चतुर्दशे बृहद्भानुः सप्तत्रिंशत्तनो जय ॥ २५ ॥

शुक्लः सत्ययुगे यः स्याद्रक्तस्त्रेतायुगे तथा ।

द्वापरे तु हरिद्वर्णः कलौ कृष्णो महाप्रभो ॥ २६ ॥

तं त्वां श्रीकृष्ण् वन्देऽहं जगदेकदयानिधे ।
निजभक्तविनोदार्थलीलानन्तावतारकृत् ॥ २७ ॥ (नमः ७)

प्रह्लादसंह्लादक भक्तवत्सल भक्तिप्रभाव-प्रकटिन्नृसिंह ।
स्वद्वेष्टृवक्षःस्थलपाटन प्रभो शिष्टेष्टमूर्ते जय दुष्टभीषण ॥ २८ ॥

अन्तःकृपातिमृदुल बहिराटोपसुन्दर ।
प्रह्लादाङ्गावलेहोत्क स्फुटब्रह्माण्डगर्जित ॥ २९ ॥ (नमः ८)

सीतापते दाशरथे रघूद्वह श्रीराम हे कोशलजासुताब्जदृक् ।
श्री लक्ष्मणज्येष्ठ हनुमदीश्वर सुग्रीवबन्धो भरताग्रज प्रभो ॥ ३० ॥

हे दण्डकारण्यचरार्यशील हे कोदण्डपाणे खरदूषणान्तक ।
बद्धाब्धिसेतोऽयि विभीषणाश्रित लङ्केशघातिन् जय कोशलेन्द्र॥ ३१॥ (नमः ९)

श्रीकृष्ण जीया मथुरावतीर्ण
स्वप्रेमदानैकनितान्तकृत्य ।
नानासुमाधुर्यमहानिधान
संव्यञ्जितैश्वर्यकृपामहत्त्व ॥ ३२ ॥

परीक्षित्पृष्टचरित सर्वसेव्यकथामृत ।
कृतपाण्डवनिस्तारपरीक्षिद्देहगोपन ॥ ३३ ॥

बहिरन्तःस्थिताऽसाधुसाधुदुह्खप्रद ।
शुश्रूषाकृष्टराजान्तर्नानाशङ्कानुपृष्ट हे ॥ ३४ ॥

त्यक्तोदान्ननृपप्राण शुकोद्गीर्णकथामृत ।
नृपव्याजासुरानीकभारार्तक्षितिरोदक ॥ ३५ ॥

धरार्तनाददुग्धाब्धिगतब्रह्माद्युपस्थित ।
ब्रह्मध्यानश्रुतादेशकथाप्यायितभुसुर ॥ ३६ ॥ (नमः १०)

शुरसेन महाराजधानीश्रीमथुराप्रिय ।
देवकीवसुदेवैकविवाहोत्सवकारण ॥ ३७ ॥

वियद्वाग्वर्धिताात्ताश्वपाशकंसातिदुर्णय ।
वसुदेववचोयुक्तिदेवकीप्राणरक्षक ॥ ३८ ॥

सत्यवाक् शौरिकंसाग्रनीतपुत्रविमोचन ।
देवर्षिकथितोदन्तकंसज्ञातेहिताव मां ॥ ३९ ॥

कंसशृङ्खलितानेकवसुदेवादिबान्धव ।
देवकीजातषड्गर्भतातकंसारिघातन ॥ ४० ॥ (नमः ११)

इति दशमसकन्धे प्रथमोऽध्यायः ॥

कंसासुरबलोद्विग्नस्वयादवकुलार्तिवित् ।
देवकीसप्तमभ्रूणधामन् मायानियोजक ॥ ४१ ॥

देवकीपुत्रतावाप्तिद्वारोत्साहितमाय हे ।
रोहिणीप्रापितस्वांश रौहिणेयप्रियाव माम् ॥ ४२ ॥

वसुदेवोल्लसच्छक्ते देवक्यष्टमगर्भग ।
स्वसवित्रीलसज्ज्योतिःकंसत्रासविषादकृत् ॥ ४३ ॥

सदा कंसमनोवर्तिन् ब्रह्मरुद्राद्यभिष्टुत ।
सत्यात्मक जगन्नाथ शुद्धसात्त्विकरूपभृत् ॥ ४४ ॥

भक्तैकलभ्यसर्वस्व सर्वसर्वार्थकृद्वपुः ।
रूपनामाश्रिताविष्ट जन्ममात्रधरार्तिहृत् ॥ ४५ ॥

स्वर्भूभूषणपादाब्ज विनोदैकार्थजात हे ।
जय भूभारहरण देवाश्वासितमातृक ॥ ४६ ॥ (नमः १२)

इति दशमस्कन्धे द्वितीयोऽध्यायः ॥

भाद्रकृष्णाष्टमीजात प्राजापत्यर्क्षसम्भवः ।
महीमङ्गलविस्तारिन् साधुचित्तप्रसादक ॥ ४७ ॥

महर्षिमानसोल्लास सन्तोषितसुरव्रज ।
निशीथसमयोद्भुत वसुदेवप्रियात्मज ॥ ४८ ॥

देवकीगर्भसद्रत्न बलभद्रप्रियानुज ।
गदाग्रज प्रसीदाशु सुभद्रापूर्वजाऽव माम् ॥ ४९ ॥

आश्चर्यवाल मां पाहि दिव्यरूपप्रदर्शक ।
कारागारान्धकारघ्न सुतिकागृहभूषण ॥ ५० ॥ (नमः १३)

वसुदेवस्तुतं साक्षाददृश्यात्मप्रदर्शकं ।
सत्प्रविष्टाप्रव्ष्टं त्वां कारणकारणम् ॥ ५१ ॥

सिद्धाकर्तृत्वकर्तृत्वं जगत्क्षेमकरोदयं ।
दैत्यमुक्तिदकारुण्यं स्वजनप्रेमवर्धनं ॥ ५२ ॥

देवकीनयनानन्द जय भीतप्रसूस्तुत ।
निर्गुणाध्यात्मदीपातिलयकारककालसृक् ॥ ५३ ॥

स्वपादाश्रितमृत्युघ्न मांसदृग्दृष्ट्ययोग्य हे ।
लोकोपहासभीताम्बावृतदिव्याङ्गसंवृते ॥ ५४ ॥ (नमः १४)

पितृप्राग्जन्मकथक स्वदत्तवरयन्त्रित ।
महाराधनसन्तोष त्रिजन्मात्मजतागत ॥ ५५ ॥

महानन्दप्रसूतात लीलामानुषबालक ।
नराकृति परब्रह्मन् प्रकृष्टाकार सुन्दर ॥ ५६ ॥

जनकोपायनिर्दिष्टयशोदाजातमाय हे ।
शायितद्वाःस्थपौरादेर्मोहितागाररक्षक ॥ ५७ ॥

स्वशक्त्युद्घाटिताशेषकवाट पितृवाहक ।
शेषोरगफणाछत्र यमुनादत्त सत्पथ ॥ ५८ ॥

व्रजमूर्तमहाभाग्य यशोदातल्पशायित ।
निद्रामोहितनन्दादि यशोदाऽविदितेहित ॥ ५९ ॥ (नमः १५)

इति दशमस्कन्धे तृतीयोऽध्यायः ॥

कंसघातितदुर्गं त्वां वन्दे दुर्गोदितोद्भवं ।
कंसविस्मापकं तातमातृबन्धविमोचकम् ॥ ६० ॥

सभयस्मृतिसंशुद्धचित्तकंसविवेकदं ।
कंसात्मज्ञानसंश्लाघिपितृमातृक्षमाप्रदम् ॥ ६१ ॥

दुर्मन्त्रिगणवाग्जालकंसदुर्मानवर्द्धनं ।
सदतिक्रमदुर्मन्त्रक्षयितासुरजीवितं ॥ ६२ ॥ (नमः १६)

इति दशमस्कन्धे चतुर्थोऽध्यायः ॥

प्रदत्तपूर्वस्वपदाब्जसौहृद-
प्रदान-दीक्षोचितदेशसङ्गत ।
स्वसेवकब्रह्मसुखाधिकोत्सव
प्रेमाकर क्रीडनकृन्नमोऽस्तु ते ॥ ६३ ॥

नन्दनन्दन सञ्जातजातकर्ममहोत्सव ।
नानादानौघकृत्तात श्रीमद्गोकुलमङ्गल ॥ ६४ ॥

कृतालङ्कारगोपालगोपीगणकृतोत्सव ।
गोपीप्रेममुदाशीर्भाक् व्रजगोरसकीर्ण हे ॥ ६५ ॥

नन्दव्रजजनानन्दिन् नन्दसन्मानितव्रज ।
दत्तव्रजमहाबूते श्रीयशोदास्तनन्धय ॥ ६६ ॥

प्राप्तपुत्रमहारत्नरक्षाव्याकुलतात ।
करदानार्थमथुरागतनन्दगृहावित ॥ ६७ ॥

वसुदेवशुभप्रश्नसमानन्दितनन्द मे ।
प्रसीद नन्दसद्वाक्यवसुदेवातिनन्दक ॥ ६८ ॥ (नमः १७)

इति दशमस्कन्धे पञ्चमोऽध्यायः ॥

वसुदेवोदितोत्पातशङ्कानन्दशुभाश्रित ।

व्रजमोहनसद्वेषविषस्तनबकीक्षित ॥ ६९ ॥

लज्जामीलितनेत्राब्ज पूतनाङ्काधिरोपित ।
बकीप्राणपयःपायिन् पूतनास्तनपीडन ॥ ७० ॥

पूतनाक्रोशजनक पूतनाप्राणशोषण ।
षट्क्रोशीव्यापिभीदायिपूतना देहपातन ॥ ७१ ॥

नानारक्षाविधानज्ञगोपस्त्रीकृतरक्षण ।
विन्यस्तरक्षागोधूले गोमुत्रशकृदाप्लुत ॥ ७२ ॥

गोपिकाविहिताजादिबीजन्यासाभिमन्त्रित ।
दह्यमानबकीदेहसौरभ्यव्यापितक्षिते ॥ ७३ ॥

पूतनामोचन द्वेष्टृराक्षसीसद्गतिप्रद ।
नन्दाघ्रातशिरोमध्य जय विस्मापितव्रज ॥ ७४ ॥ (नमः १८)

इति दशमस्कन्धे षष्ठोऽध्यायः ॥

औत्थानिकोत्सवाम्बाभिषिक्त सञ्जातनिद्रदृक् ।
महोच्चशकटाधःस्थबालपर्यङ्कशायित ॥ ७५ ॥

अञ्जनस्निग्धनयन पर्यायाङ्कुरितस्मित ।
लीलाक्षतरलालोक मुखार्पितपदाङ्गुले ॥ ७६ ॥

जयोत्सवक्रियासक्तधात्रीस्तन्यार्थरोदन ।
उत्क्षिप्तचरणाम्भोज हेऽनोविपरिवर्तक ॥ ७७ ॥

व्रजानिर्णेयचरित शकटासुरभञ्जन ।

द्विजोदितस्वस्त्ययन मन्त्रपूतजलाप्लुत ॥ ७८ ॥ (नमः १९)

यशोदोत्सङ्गपर्यङ्कं लीलाविष्कृतगौरवं ।
मातृविस्मयकर्तारं तृणावर्तापवाहितम् ॥ ७९ ॥

जननीमार्गितगतिं तृणावर्तातिदुर्वहं ।
गलग्रहणश्लिष्टतृणावर्तनिपातनम् ॥ ८० ॥

तृणीकृततृणावर्तं रुदद्गोपाङ्गनेक्षितं ।
गोपीधात्र्यर्पितं वन्दे त्वां व्रजानन्ददायकम् ॥ ८१ ॥ (नमः २०)

यशोदास्तन्यमुदित यशोदामुखवीक्षक ।
यशोदानन्दनाहं ते यशोदालालिताऽव मां ॥ ८२ ॥

जनैश्चुम्ब्यमानास्यमध्यदर्शितविश्व मे ।
प्रसीद परमाश्चर्यदर्शिन् विस्मितमातृक ॥ ८३ ॥

पूतनादिवधालोकिमातृशङ्काशतप्रद ।
स्वभावविविधाश्चर्यमयतातन्निरासक ॥ ८४ ॥ (नमः २१)

इति दशमस्कन्धे सप्तमोऽध्यायः ॥

गर्गवाक्चातुरीहृष्टनन्दनीतरहःस्तलं
प्रशस्तनामकरणं गर्गसूचितवैभवम् ॥ ८५ ॥

साधुरक्षाकरं दुष्टमारकं भक्तवत्सलं ।
महानारायणं वन्दे नन्दानन्दविवर्द्धनं ॥ ८६ ॥ (नमः २२)

जय रिङ्गऽलीलाढ्य जानुचंक्रमणोत्सुक ।

घृष्टजानुकरद्वन्द्व मौग्ध्यलीलामनोहर ॥ ८७ ॥

किङ्किनीनादसंहृष्ट व्रजकर्दमविभ्रम ।
व्यालम्बिचूलिकारत्नग्रीवाव्याघ्रनखोज्ज्वल ॥ ८८ ॥

पङ्कानुलेपरुचिर मांसलोरुकटीतट ।
स्वमुखप्रतिबिम्बार्थिन् प्रतिबिम्बानुकारक ॥ ८९ ॥

अव्यक्तवल्गुवाग्वृत्ते स्मितलक्ष्यरदोद्गम ।
धात्रीकरसमालम्बिन् प्रस्खलच्चित्रचंक्रम ॥ ९० ॥ (नमः २३)

जयाङ्गनागणप्रेक्ष्यबाल्यलीलानुकारक ।
आविष्कृताल्पसामर्थ्य पादविक्षेपसुन्दर ॥ ९१ ॥

वत्सपुच्छसमाकृष्ट वत्सपुच्छविकर्षण ।
विस्मारितान्यव्यापारगोपगोपीप्रमोदन ॥ ९२ ॥

गृहकृत्यसमासक्तमातृवैयग्र्यकारक ॥
ब्रह्मादिकाम्यलालित्य जगदाश्चर्यशैश्व ॥९३ ॥ (नमः २४)

प्रसीद बालगोपाल गोपीगणमुदावह ॥
अनुरूपवयस्यप्त चारुकौमारचापल ॥ ९४ ॥

अकालवत्सनिमोक्तर्व्रजव्याक्रोशसुस्मित ॥
नवनीतमहाचोर वानराहारदायक ॥ ९५ ॥

पीठोलूखलसोपान क्षीरभाण्डविधेदक ॥
शिक्यभण्डसमाकर्षिन् ध्वान्तागारप्रवेशकृत् ॥ ९६ ॥

स्वाङ्गरत्नप्रदीपाढ्य गोपीधाष्ट्र्यातिवादक ॥

गोपीव्रातोक्तिभीभ्राम्यन्नेत्र मातृप्रहर्षण ॥ ९७ ॥ (नमः २५)

भक्तोपालम्भनानन्द वाञ्छाभक्षितमृत्तिक ।
रामादिप्रोक्तमृद्वार्त्त हितैष्यम्बातिभर्त्सित ॥ ९८ ॥

कृतकत्रासलोलाक्ष मित्रान्तर्गूढविग्रह ।
बलादिवचनाक्षेप्तर्जननीप्रत्ययावह ॥ ९९ ॥

व्यात्तस्वल्पाननाब्जान्तर्मातृदर्शितविश्व हे ।
यशोदाविदितैश्वर्य जय स्वाच्छन्द्यमोहन ॥ १०० ॥

सवित्रीस्नेहसंश्लिष्ट यशोदास्नेहवर्धन ।
स्वभक्तब्रह्मसन्दत्तधराद्रोणवरार्थकृत् ॥ १०१ ॥ (नमः २६)

इति दशमस्कन्धेऽष्टमोऽध्यायः ॥

दधिर्निर्मन्थनारम्भिसवित्रीस्तन्यलोलुप ।
जननीगीतचरित दधिमन्थनदण्डधृक् ॥ १०२ ॥

मातृस्तन्यामृतातृप्त क्षीरोत्तारगताम्बिक ।
मृषा कोपप्रकम्पौष्ठ दधिभाजनभञ्जन ॥ १०३ ॥

शिक्यहैयङ्गवस्तेन नवनीतमहाशन ।
हैयङ्गवीनरसिक नवनीताअवकीर्णक ॥ १०४ ॥

नवनीतविलिप्ताङ्ग किङ्किणीक्वणसूचित ।
नवनीतमहादातर्मृषाश्रो चौर्यशङ्कित ॥ १०५ ॥

मातृभीधावनपर गोष्ठाङ्गनविनोदन ।

जननीश्रमविज्ञातदामोदर नमोऽस्तु ते ॥ १०६ ॥

दामाकल्पचलापाङ्ग गाढोलूखलबन्धन ।
यशोदावत्सलानन्तदामबन्धनियन्त्रित ॥ १०७ ॥ (नमः २७ )

इति दशमस्कन्धे नवमोऽध्यायः ॥

दृष्टार्जुनतरुद्वन्द्व कुवेरसुतशापभित् ।
अपराधिसमुद्धारदयानारदगीतवित् ॥ १०८ ॥

अकिञ्चनजनप्राप्य श्रीमदान्धाद्यगोचर ।
आकृष्टोलूखलालान जय श्रीनारदप्रिय ॥ १०९ ॥

कृतदेवर्षिगीतार्थयमलार्जुनभञ्जन ।
धनदात्मजसत्स्तोत्रस्तुत सर्वेश्वरेश्वर ॥ ११० ॥

जीवदुर्ज्ञेयमहिमन् सदा भक्तैकचित्तभाक् ।
असाधारणलीलोह्य विश्वमङ्गलमङ्गल ॥ १११ ॥

स्वदासदासताप्रीत भक्तभक्तातिवत्सल ।
गुह्यकार्थितसर्वाङ्गहृषीकभजनामृत ॥ ११२ ॥

शिवामित्रसुतस्तोत्रसन्तोषामृतवर्षिवाक् ।
स्वभक्तवीक्षामाहात्म्यवादिन् प्रेमवरप्रद ॥ ११३ ॥ (नमः २८)

इति दशमस्कन्धे दशमोऽध्यायः ॥

गोपविस्मापनक्रीड बालसङ्कथितेहित ।
सम्भ्रान्तनन्दसन्दृष्ट स्मितभिन्नौष्ठसम्पुट ॥ ११४ ॥

पतितार्जुनमध्यस्थ महोलूखलकर्षक ।
गोपाशालिलसन्मध्य नन्दमोचितबन्धन ॥ ११५ ॥

स्वभक्तवश्यतादर्शिन् वल्लरीस्तोभनर्त्तित ।
बालकोद्गीतिनिरत बाहुक्षेपमनोरम ॥ ११६ ॥

गोप्याज्ञाधृतपीठादे नवनीतार्थनापटो ।
व्रजमोहकरक्रीईडासुधासिन्धो नमोऽस्तु ते ॥ ११७ ॥ (नमः २९)

उपनन्दाहितप्रीते वृन्दावनरसोत्सुक ।
प्रस्थानशकटारूढ गोपिकागीतचेष्टित ॥ ११८ ॥

हृद्यवृन्दावनावास श्रीवृन्दावनचन्द्र हे ।
वृन्दावनप्रिय श्रीमद्वृन्दावनविहूषण ॥ ११९ ॥

व्याघ्रादिहिंस्रसहजवैरहर्त्तः प्रसीद मे ।
श्रीगोवर्धनकालिन्दीपुलिनालोकहर्षित ॥ १२० ॥ (नमः ३०)

व्रजानन्दाकरक्रीड मनोज्ञकलभाषण ।
वत्सपालनसञ्चारिन् व्रजादूरधराचर ॥ १२१ ॥

रामादिबालकाराम नानाक्रीडापरिच्छद ।
वंशीवादनसंसक्त वेणुचित्रस्वनाकर ॥ १२२ ॥

मुरलीवदन श्रीमत्त्रिभङ्गीमधुराकृते ।
क्षेपणीक्षेपणप्रीत कन्दुकक्रीडनोत्सुक ॥ १२३ ॥

वृषवत्सानुकरण वृषध्वानविडम्बन ।
जयान्योन्यरणप्रीत सर्वजन्तुरुतानुकृत् ॥ १२४ ॥ (नमः ३१)

जय वत्सासुरध्वंसिन् कपित्थव्रातपातन ।
बालप्रशंसासंहृष्ट पुष्पवर्ष्यमरार्चित ॥ १२५ ॥

गोवत्सपालनैकाग्र्य बालवृन्दाद्भुतावह ।
विकालागारगामिन् मां पाहि गोधूलिधूसर ॥ १२६ ॥

सुमनोऽलङ्कृतशिरो गुञ्जाप्रालम्बनावृत ।
पुष्पकुण्डल बर्हस्रक् पत्रवाद्यविनोदक ॥ १२७ ॥

मनोज्ञपल्लवोत्तंस वनमालाविभूषित ।
वनधातुविचित्राङ्गवर्हिवर्हावतंसक ॥ १२८ ॥ (नमः ३२)

प्रातर्भोजनसंयुक्त वत्सव्रातपुरःसर ।
गिरिशृङ्गमहाकायबकासुरगेतेक्षण ॥ १२९ ॥

तीक्ष्णतुण्डबकग्रस्तमूर्च्छाविष्टसुहृद्गण ।
महाबकमुखाक्रीड बकतालुप्रदाहक ॥ १३० ॥

जय दुष्टबकोद्गीर्ण बकचञ्चुविदारण ।
बलादिबालकाश्लिष्ट पुष्पवर्षिसुरेडित ॥ १३१ ॥ (नमः ३३)

इति दशमस्कन्धे एकादशोऽध्यायः ॥

प्रातर्वन्याशनाकाङ्क्षिन् शृङ्गाकारितवत्सप ।
असङ्ख्यवत्ससञ्चारिन् असङ्ख्यार्भकसङ्गत ॥ १३२ ॥

शिक्यचौर्यादिविविधबालक्रीडातितोषित ।
स्वपादस्पर्शनक्रीडापटु बालकहर्षित ॥ १३३ ॥

वयस्याशक्यसहनक्षणमात्राविलोकन ।
शुकगीतमहाभाग्यव्रजबालकवेष्टित ॥ १३४ ॥ (नमः ३४)

दुर्बुद्धिसुप्तपीनाहीतरथोत्प्रेक्षकानुग ।
दुश्चेष्टाघासुराभिज्ञ मुग्धार्भकरिरक्षिषो ॥ १३५ ॥

कृत्यचिन्तामहालील सर्पस्यान्तःप्रवेशकृत् ।
अघदानवसंहर्तर्वत्सवत्सपजीवन ॥ १३६ ॥

अमरानन्दविस्तारिन् निन्द्यदानवमुक्तिद ।
विस्मापितागतब्रह्मन्नाश्चर्याब्धे नमोऽस्तु ते ॥ १३७ ॥ (नमः ३५)

इति दशमस्कन्धे द्वादशोऽध्यायः ॥

पौगण्डाख्यातकौमार महाश्चर्यचरित हे ।
परीक्षिच्छुकदेवातिविमोहनकथामृत ॥ १३८ ॥

स्तुतरम्यसरस्तीराद्दृतशाद्वलजेमन ।
सरःसुपुलिनासीन बालमण्डलमण्डित ॥ १३९ ॥

सखिश्रेण्यन्तरास्थातर्व्रजार्भकसहाशन ।
पीतवस्त्रोदरन्यस्तवेणो वन्यविभूषण ॥ १४० ॥

वामकक्षान्तरन्यस्तशृङ्गवेत्र प्रसीद मे ।
वामपाणिस्थदध्यन्न कवलाशनसुन्दर ॥ १४१ ॥

अङ्गुलीसन्धिविन्यस्तफल बालालिचित्तहृत् ।
स्वनर्महास्यमानार्भ स्वर्ग्याश्चर्यकराशन ॥ १४२ ॥ (नमः ३६)

अदृश्यतर्णकान्वेशिन् वल्लवार्भकभीतिहन् ।
अदृष्टवत्सपव्रात वत्सवत्सपमार्गग ॥ १४३ ॥

विदितब्रह्मचरित वत्सवत्सपरूपधृक् ।
वत्सपालहरब्रह्मतत्तन्मातृमुदिच्छक ॥ १४४ ॥

यथाव्रजार्भकाकार यथावत्सपचेष्टित ।
यथावत्सक्रियारूप यथास्थाननिवेशन ॥ १४५ ॥ (नमः ३७)

गोगोपीस्तन्यपाहन्त गोगोपीप्रीतिवर्द्धन ।
बलरामोहितोदन्त पितामहविमोहन ॥ १४६ ॥

शुद्धसत्त्वघनस्वीयबहुरूपप्रदर्शक ।
अत्याश्चर्येक्षणाशक्तब्रह्मव्युत्थानकारक ॥ १४७ ॥

स्वान्तर्दृष्ट्यतिदीनाजबहिर्दृष्टिसुखप्रद ।
गोपार्भवश रुचिर सपाणिकवलाव माम् ॥ १४८ ॥

व्यालीनसृष्टवत्सार्भगण ब्रह्मत्रपाकर ।
ब्रह्मानन्दाश्रुधौताङ्घ्रे दृष्टतत्त्वविधिस्तुत ॥ १४९ ॥ (नमः ३८)

इति दशमस्कन्धे त्रयोदशोऽध्यायः ॥

विधिवाक्यामृताब्धीन्दु गोपबालकवेश हे ।
ब्रह्मावतारदिव्याङ्गाचिन्त्यमाहात्म्यरूप भृत् ॥ १५० ॥

मृषाज्ञानश्रमास्पर्शिभक्त्येकसुखनिर्जित ।
श्रेयःसारात्युदासीनदुर्बुद्धिक्लेशशेषक ॥ १५१॥

पूर्वपूर्वविमुक्तौघाश्रितभक्तिसुमार्ग हे ।
नैर्गुण्याधिकदुर्ज्ञेयाश्चर्यानन्तमहागुण ॥ १५२ ॥

केवलात्मकृपापाङ्गवीक्षापेक्षकमोचक ।
निवेदितापराधातिभीत पुत्रार्थितक्षम ॥ १५३ ॥

रोमकूपभ्रमत्कोटिकोटिब्रह्माण्डमण्डल ।
प्रसूवदागःसहन जगन्मातर्जगत्पितः ॥ १५४ ॥

नाभ्यब्जजनितब्रह्मन्नारायण निरावृते ।
स्वर्भान्वाप्रपञ्चिक्षातदसत्यत्वदर्शक ॥ १५५ ॥

सत्यलीलावतारौघाचिन्त्यलीलातिवैभव ।
मिथ्यासत्यत्वसंपादिन् सदा परमसत्य हे ॥ १५६ ॥

गुरुप्रसादसंदृश्य प्रपञ्चजनकास्मृते ।
बन्धमोक्षादिमिथ्यात्वकृद् विचारणमात्रक ॥ १५७ ॥

असत्त्यागिस्वभक्तान्तर्बहिरात्माधिकस्फुट ।
स्वपादमहिमज्ञापिस्वपादाब्जप्रसाद हे ॥ १५८ ॥

विधातृभूरिभाग्यैकप्रार्थ्यदासनुदास्यक ।
चतुर्मुखमुहुर्गीतभक्तिमाहात्म्य पाहि माम् ॥ १५९ ॥ (नमः ३९ )

धन्यधन्यव्रजवधूधेनुतर्पितमोदित ।
नित्यपूर्णमहाभाग्य व्रजौकोमित्रतां गत ॥ १६० ॥

व्रजवासिप्रसङ्गान्तर्देवताबहुसौख्यद ।
व्रजजाताङ्घ्रिरेणुस्पृक्तृणजन्मेप्सुपद्मज ॥ १६१ ॥

प्रेमार्पिताशेष घोषवासिमहाऋणिन् ।
सद्वेशमात्रसंज्ञातपूतनात्म प्रदायक ॥ १६२ ॥

विरक्तप्राप्यदानानुरक्तापर्याप्तियन्त्रित ।
पुत्रत्वाद्यनुकारातिसुहृदानृण्यलज्जित ॥ १६३ ॥

अविद्वन्मानिसच्चित्तवागगोचरवैभव ।
अत्यानन्दमुहुर्नामकीर्तनब्रह्म वन्दित ॥ १६४ ॥ (नमः ४०)

ब्रह्मप्रसादसुमुख भक्तवत्सल वाक्प्रिय ।
स्मितेक्षाहर्षितभ्रह्मन्ब्रह्मानुज्ञाप्रदायक ॥ १६५ ॥

वत्सवत्सपमोहघ्न यथापूर्वार्भतर्णक ।
पुलिनानीतवत्सौघ नमस्तेऽद्भुतकर्मणे ॥ १६६ ॥

मुग्धबालालिवाग्जातहास व्रजगृहोत्सव ।
विचित्रवेशचरित गोपीहृदयमोदन ॥ १६७ ॥

आत्माधिकप्रियतम सर्वभूतसुहृद्वर ।
परिक्षिच्छुकसंवादनिश्चितप्रेमसागर ॥ १६८ ॥

विचित्रलील मां पाहि निलायनविहारवित् ।
क्रीडासेतुविधानज्ञ प्लवङ्गप्लवनोद्धत ॥ १६९ ॥ (नमः ४१)

इति दशमस्कन्धे चतुर्दशोऽध्यायः ॥

पौगन्धागम गोपाल वृन्दाविपिनमङ्गल ।
वृन्दावनान्तःसञ्चारिन्सम्मानितनिजाग्रज ॥ १७० ॥

वृन्दावनगुणाख्यानमिषदत्तम्हावर ।
अतिवृन्दावनप्रीत नानारतिविचक्षण ॥ १७१ ॥

भृङ्गानुकारिन् मां पाहि कूजनिर्जितकोकिल ।
उपात्तहंसगमन शिखिनृत्यानुकारक ॥ १७२ ॥

प्रतिध्वानप्रमुदित शाखाकूर्दनकोविद ।
नामाकारितगोवृन्द रज्जुयज्ञोपवीतभृत् ॥ १७३ ॥

नियुद्धलीलासंहृष्ट बलभद्रश्रमापनुत् ।
गोपप्रशंसानिपुण वृक्षच्छायाहृतश्रम ॥ १७४ ॥

पुष्पपल्लवतल्पाढ्य गोपोत्सङ्गोपबर्हण ।
गोपसंवाहितपद गोपव्यजनबीजित ॥ १७५ ॥

गोपगानसुखस्वप्न जितैश्यग्राम्यचेष्टित ।
रमालालितपादाब्जाङ्कितवृन्दावनस्थल ॥ १७६ ॥ (नमः ४२)

जय श्रीदामसुबलस्तोककृष्णैकबान्धव ।
वृषालवृषभौजस्विदेवप्रस्थवयस्य हे ॥ १७७ ॥

वरूथपार्जुनसख भद्रसेनांशुवल्लभ ।
तालीवनकृतक्रीड बलपातितधेनुक ॥ १७८ ॥

उत्तालतालराजीभिद्रासभासुरनाशन ।
गोपवृन्दस्तवानन्दिन् पुण्यश्रवणकीर्तन ॥ १७९ ॥ (नमः ४३)

गोपीसौभाग्यसंभाव्यं गोधूलिच्छुरितालकं ।
अलकाबद्धसुमनःशिखण्डं रुचिरेक्षणम् ॥ १८० ॥

सव्रीडहासविनयकटाक्षाक्षेपसुन्दरं ।
गोपीलोभनवेशं त्वां वन्दे गोपीरतिप्रदं ॥ १८१ ॥

जयाम्बाकारितस्नान पुण्डरीकावतंसक ।
मुक्ताहारलसत्कण्ठ करकङ्कणसुन्दर ॥ १८२ ॥

मञ्जुशिञ्जितमञ्जीर स्वर्णालङ्कारभूषण ।
दिव्यस्रग्गन्धवासोभृज्जनन्युपहृतान्नभुक् ॥ १८३ ॥

विलासललितस्मेर गर्वलीलावलोकन ।
सुखपल्यङ्कसंविष्ट राधासंलापनिर्वृत ॥ १८४ ॥ (नमः ४४)

यमुनातटसञ्चारिन् कालियह्रदतीरग ।
नमस्तेऽतिसुधादृष्टे विषार्तव्रजजीवन ॥ १८५ ॥

अतिविस्मितगोपालकुलानुमितचेष्टित ।
जय स्वजनरक्षार्थनिगूढैश्वर्यदर्शक ॥ १८६ ॥ (नमः ४५)

इति दशमस्कन्धे पञ्चदशोऽध्यायः ॥

तुङ्गनीपसमारूढं सर्पह्रदविहारिणं ।
कालियक्रोधजनकं क्रुद्धाहिकुलवेष्टितं ॥ १८७ ॥

मोहमग्नसुहृद्वर्गं साश्रुगोकुलवीक्षितं ।
महोत्पातसमुद्विग्नव्रजान्विष्टगतिं भजे ॥ १८८ ॥

पदचिह्नाप्तमार्गं त्वां मृतप्रायस्वरान्धवं ।
रामरक्षितनन्दादिमुमूर्षुव्रजशोचितं ॥ १८९ ॥ (नमः ४६)

नमस्ते स्वीयदुःखघ्न सर्पक्रीडाविशारद ।
कालियाहिफणारङ्गनट कालियमर्दन ॥ १९० ॥

कालियफणमाणिक्य रञ्जितश्रीपदाम्बुज ।
निजगन्धर्वसिद्धादिगीतवाद्यादिनर्तित ॥ १९१ ॥

पादाम्बुजविमर्दातिनमिताहीन्द्रमस्तक ।
रक्तोद्गारिविभिन्नाङ्गदीनकालियसंस्मृत ॥ १९२ ॥ (नमः ४७)

नागपत्नीस्तुतिप्रीत हितार्थोचितदण्डकृत् ।
क्रोडप्रसादगाम्भीर्य महापुण्यैकतोष्य हे ॥ १९३ ॥

निरुपाधिकृपाकारिन् सर्पस्त्रीप्रार्थ्यदायक ।
सर्वार्थत्यागिभक्तार्थ्यस्वाङ्घ्रिरेखाचितोरग ॥ १९४ ॥

अचिन्त्यैश्वर्यमहिमन्नानाजीवस्वभावसृक् ।
नानाक्रीडनकक्रीडिन् स्वप्रजागःक्षमोचित ॥ १९५ ॥

नागस्त्रीपतिभिक्षाद जय कालियभाषित ।
अग्राह्यसृष्टदुष्टागोऽयोग्यमोहितनिग्रह ॥ १९६ ॥

स्वाङ्कमुद्राङ्किताहीन्द्रमूर्द्धन् कालियशासन ।
पूर्वस्थानापिताहीन्द्र सुपर्णजभयापहृत् ॥ १९७ ॥

नागोपायनहृष्टात्मन् कालियातिप्रसादित ।
यमुनाह्रदसंशोधिन् ह्रदोत्सारितकालिय ॥ १९८ ॥ (नमः ४८)

इति दशमस्कन्धे षोडशोऽध्यायः ॥

स्वबल्यशनकालियदर्पमर्दनवाहन ।
सौभर्युक्तिसव्कागम्यसर्पावासह्रदोद्धुर ॥ १९९ ॥

दिव्यस्रग्गन्धवस्त्राढ्य दिव्याभरणभूषित ।
महामणिगणाकीर्ण व्रजजीवनदर्शन ॥ २०० ॥

सहासश्रीवलाश्लिष्ट गोपालिङ्गननिर्वृत ।
प्रसीद पीतदावाग्ने स्वजनार्तिविनाशन ॥ २०१ ॥ (नमः ४९ )

इति दशमस्कन्धे सप्तदशोऽध्यायः ॥

काकपक्षधर श्रीमद्वसन्तितनिदाघ हे ।
नयनाच्छादनक्रीड राजलीलानुकारक ॥ २०२ ॥

मृगादिचेष्टाक्रीडाकृद्दोलानौकाविनोदक ।
नानालौकिकलीलाभृन्नानास्थानविहारकृत् ॥ २०३ ॥

क्रीडासम्प्राप्तभाण्डीर जय भाण्डीरमण्डन ।
गोपरूपिप्रलम्बघ्न द्वन्द्वक्रीडाप्रवर्तक ॥ २०४ ॥

बाह्यवाहककेलीमन् जय श्रीदामवाहक ।
बलपातितदुर्धर्षप्रलम्ब बलवत्सल ॥ २०५ ॥ (नमः ५० )

इति दशमस्कन्धेऽष्टादशोऽध्यायः ॥

जय मुञ्जाटवीभ्रष्टमार्गपश्वार्तिनाशक ।
दावाग्निभीतगोपालदृङ्निमीलनदेशक ॥ २०६ ॥

मुञ्जाटव्यग्निशमन पीतोल्वणदवानल ।
भाण्डीरापितगोगोप योगाधीश नमोऽस्तु ते ॥ २०७ ॥ (नमः ५१)

इति दशमस्कन्धे एकोनविंशोऽध्यायः ॥

प्रावृड्श्रीभूषितारण्य वृष्टिकालविनोदकृत् ।
गुहावनस्पतिक्रोडसेविन् मूलफलाशन ॥ २०८ ॥

पाषाणन्यस्तदध्यन्नभुक् वर्षाहर्षितव्रज ।
शाद्वलाशनवर्षाश्रीसम्मानक नमोऽस्तु ते ॥ २०९ ॥

हे शरन्निर्मलव्योमचारुकान्ते प्रसीद मे ।
शरच्चन्द्रलसद्वक्त्रकृतगोपीमहास्मर ॥ २१० ॥ (नमः ५२)

इति दशमस्कन्धे विंशोऽध्यायः ॥

शरद्विहारमधुर शरत्पुष्पविभूषण ।
कर्णिकारावतंसं त्वां नटवेशधरं भजे ॥ २११ ॥

विन्यस्तवदनाम्भोजलोचनप्रान्तनर्तक ।
बिम्बाधरार्पितोदारवेणो जय सुगायन ॥ २१२ ॥

नमो वक्त्रावलोकाय त्रिभङ्गललिताय ते ।
वेणुमोहितविश्वाय गोपिकोद्गीतकीर्तये ॥ २१३ ॥ (नमः ५३)

चक्षुःसाफल्यसम्पादिश्रीमद्वक्त्राब्जवीक्षण ।
नानामालालसद्वेश गोपालसभशोभन ॥ २१४ ॥

सदातिपुण्यवद्वेणुपीयमानाधरामृत ।
वृन्दावनातिकीर्तिश्रीप्रदपदाब्जलक्षण ॥ २१५ ॥

अपूर्वमुरलीगीतनादनर्तितबर्हिण ।
शाखोत्कीर्णशकुन्तौघ सर्वप्राणिमनोहर ॥ २१६ ॥

विस्मारित तृणग्रासमृगीकुलविलोभित ।
सुशीलरूपसङ्गीतदेवीगणविमोहन ॥ २१७ ॥

गाढरोदितगोवृन्द प्रेमोत्कर्णिततर्णक ।
निर्व्यापारीकृताशेषमुनितुल्यविहङ्गम ॥ २१८ ॥

गीतस्तब्धसरित्पूर च्छत्रायितबलाहक ।
पुलिन्दीप्रेमकृद्घासलग्नपादाब्जकुङ्कुम ॥ २१९ ॥

हरिसेवकवर्यत्वसम्पद्गोवर्धनार्चित ।
स्वप्रेमपरमानन्दचित्रायितचराचर ॥ २२० ॥

रागपल्लवितस्थाणो गीतानमितपादप ।
गोपालविलसद्वेश गोपीमारविवर्धन ॥ २२१ ॥

अशेषजङ्गमस्थाणुस्वभावपरिवर्तक ।
आर्द्रीकृतशिलाकाष्ठ निर्जीवोज्जीवनाव नः ॥ २२२ ॥ (नमः ५४)

इति दशमस्कन्ध एकविंशोऽध्यायः ॥

गोपकन्याव्रतप्रीत प्रसीद वरदेश्वर ।
जलक्रीडासमाशक्तगोपीवस्त्रापहारक ॥ २२३ ॥

कदम्बारूढ वन्दे त्वां चित्रनर्मोक्तिकोविद ।
गोपीस्तवविलुब्धात्मन् गोपिकायाचितांशुक ॥ २२४ ॥

स्रोतोवासःस्फुरद्गोपकन्याकर्षणलालस ।
शीतार्तयमुनोत्तीर्णगोपीभावप्रसादित ॥ २२५ ॥

स्कन्धारोपितगोपस्त्रीवस्त्र सस्मितभाषण ।
गोपीनमस्क्रियादेष्टर्गोप्येककरवन्दित ॥ २२६ ॥

गोप्यञ्जलिविशेषार्थिन् गोपकन्यानमस्कृत ।
गोपीवस्त्रद हे गोपीकामिताकामितप्रद ॥ २२७ ॥

गोपीचित्तमहाचोर गोपकन्याभुजङ्गम ।
देहि स्वगोपिकादास्यं गोपीभावविमोहित ॥ २२८ ॥ (नमः ५५)

श्रीवृन्दावनदूरस्थविप्राभावाभिकर्षित ।
आतपत्रायिताशेषतरुदर्शनहर्षित ॥ २२९ ॥

परोपकारनिरततरुजन्माभिनन्दक ।
यमुनामृतसंतृप्त गोगोपगणसेवित ॥ २३० ॥ (नमः ५६)

इति दशमस्कन्धे द्वाविंशोऽध्यायः ॥

यज्ञपत्नीप्रसादार्थगोपक्षुदतिवर्धन ।
क्षुदार्तगोपवाग्व्यग्र जय यज्वान्नयाचक ॥ २३१ ॥

दुष्प्रज्ञयज्वावज्ञात भक्तविप्रादिदृक्षित ।
ब्राहण्याअकर्षकोदन्त यज्ञपत्नीमनोहर ॥ २३२ ॥

ब्राह्मणीतापभिच्चित्रवेशावस्थानभूषण ।
जय द्विजसतीश्लाघिन् यज्ञपत्नीष्टदास्यक ॥ २३३ ॥

ब्राह्मणीकाकुसन्तुष्ट ब्राह्मणीप्रेमभक्तिद ।
पतिरुद्धसतीसद्योविमुक्तिद नमोऽस्तु ते ॥ २३४ ॥

यजमानीवितीर्णान्नतृप्त विप्रानुतापद ।
स्वीयसङ्गद्विजज्ञानप्रद ब्रह्मण्यदेव हे ॥ २३५ ॥ (नमः ५७)

इति दशमस्कन्धे त्रयोविंशोऽध्यायः ॥

जय वासवयागज्ञ पितृपृष्टमखार्थक ।
श्रुततातोक्तयज्ञार्थ कर्मवादावतारक ॥ २३६ ॥

नानापन्यायवादौघशक्रयागनिबारक ।
गोवर्धनाद्रिगोयज्ञप्रवर्तक नमोऽस्तु ते ॥ २३७ ॥

प्रोक्ताद्रिगोमखविधे यज्ञदत्तोपहारभुक् ।
गोपविश्वासनार्थाद्रिच्छलस्थुलान्यरूपधृक् ॥ २३८ ॥

गोवर्धनशिरोरत्न गोवर्धनमहत्त्वद ।
कृतभूषाशनाभीरकारिताद्रिपरिक्रम ॥ २३९ ॥ (नमः ५८)

इति दशमस्कन्धे चतुर्विंशोऽध्यायः ॥

जनितेन्द्ररुषं शक्रमदवृष्टिशमोन्मुखं ।
गोवर्धनाचलोद्धर्तस्त्वां वन्देऽद्भुतविक्रमम् ॥ २४० ॥

लीलागोवर्धनधर व्रजरक्षापरायण ।
भुजानन्तोपरिविन्यस्तक्ष्मानिभक्ष्माभृदुत्तम ॥ २४१ ॥

गोवर्धनच्छत्रदण्डभुजार्गल महाबल ।
सप्ताहविधृताद्रीन्द्र मेघवाहनगर्वभित् ॥ २४२ ॥

सप्ताहैकपदस्थायिन् व्रजक्षुत्तृड्गुदीक्षण ।
जय भग्नेन्द्रसङ्कल्प महावर्षनिबारण ॥ २४३ ॥

स्वस्थानस्थापितगिरे गोपीदध्यक्षतार्चित ।
देवतासुमनोवृष्टिसिक्त वासवभीषण ॥ २४४ ॥ (नमः ५९ )

इति दशमस्कन्धे पञ्चविंशोऽध्यायः ॥

जयाद्भुतमहाचेष्टाविस्मितव्रजशङ्कित ।
गोपानुपृष्टजनक गोपोद्गीताखिलेहित ॥ २४५ ॥

नन्दोक्तगर्गसद्वाक्यगोपाशङ्कानिरासक ।
गोष्ठरक्षक मां रक्ष गोपालानन्दवर्धन ॥ २४६ ॥ (नमः ६० )

इति दशमस्कन्धे षड्विंशोऽध्यायः ॥

भीतलज्जितदेवेशकिरीटस्पृष्टपाद हे ।
वासवस्तुत सर्वज्ञ जितमायास्तदूषण ॥ २४७ ॥

धर्मपाल खलध्वंसिन् दुष्टमनघ्नचेष्टित ।
स्वीयापराधक्षमण शरणागतवत्सल ॥ २४८ ॥

शक्रशिक्षक शक्रत्वप्रद सुरभीडित ।
सुरभीप्रार्थितेन्द्रत्व श्रीगोइन्द नमोऽस्तु ते ॥ २४९ ॥

कामधेनुपयःपूराभिषिक्तामरपूजित ।
ऐरावतकरानीतवियद्गङ्गाजलाप्लुत ॥ २५० ॥

गोगोपगोपिकानन्दिन् सर्वलोकशुभाङ्कर ।
हर्षपूरितदेवेन्द्र जगदानन्दवर्धन ॥ २५१ ॥ (नमः ६१)

इति दशमस्कन्धे सप्तविंशोऽध्यायः ॥

प्रसीद मे पयोमग्ननन्दान्वेषिन् पितृप्रिय ।
वरुणालय संप्राप्त वरुणाभीष्टदर्शन ॥ २५२ ॥

वरुणार्चितपादाब्ज वरुणातिप्रसादित ।
वरुणागःक्षमाकारिन्नन्दबन्धविमोचन ॥ २५३ ॥

नन्दश्रावितमाहात्म्य गोपज्ञानातिवैभव ।
गोपसङ्कल्पविज्ञातः करुणाकुलमानस ॥ २५४ ॥

स्वलोकालोकसंहृष्टगोपवर्गार्थवर्गद ।
ब्रह्महृदोद्धृताभीराभीष्टब्रह्मपदप्रद ॥ २५५ ॥ (नमः ६२)

इति दशमस्कन्धेऽष्टविंशोऽध्यायः ॥

जय जय निजपादाम्भोजसत्प्रेमदायिन्
रसिकजनमनोहृद् रासलीलाविनोदिन् ।

विवृतमधुरकैशोरातिलीलाप्रभाव
प्रियजनवशवर्तिन् व्यक्तसत्यस्वभाव ॥ २५६ ॥

त्यक्तात्मरामतामाय तुच्छीकृतनिजागम ।
भक्तप्रार्थ्यनिजप्रेमधारादानार्थरासकृत् ॥ २५७ ॥

शरन्निशाविहारोत्क चन्द्रोदयरताशय ।
गोपीविमोहनोद्गीत परमाकर्षपण्डित ॥ २५८ ॥

अनादृतनिषेधौघीकृतगोपसतीगण ।
त्यक्तसर्वक्रियापेक्षगोपस्त्रीप्राप्तसङ्गम ॥ २५९ ॥ (नमः ६३)

प्रसीद भर्तृसंरुद्धगोपीप्रेमाग्निवर्धन ।
स्वकामोन्मत्तगोपस्त्रीदेहबन्धविमोचन ॥ २६० ॥

शुकक्रोधोक्तिनिर्णीतमहामहिमसागर ।
क्रोधादिभजमानार्थप्रदस्मरण मां स्मर ॥ २६१ ॥ (नमः ६४)

गोपिकानयनास्वाद्य गोपीवञ्चनवाक्पटो ।
गोपीमिष्टोक्तिशुश्रूषास्वधर्मभयदर्शक ॥ २६२ ॥

गोपीमहाधिविस्तारिन् गोपीरोदनवर्धन ।
गोप्यर्थिताङ्गसंसर्ग गोपीकाकुभिनिर्वृत ॥ २६३ ॥

अवहित्थापरित्यक्त प्रोद्यन्मानसविक्रिय ।
धूर्ताग्रगण्य मां पाहि काममुग्ध स्मितानन ॥ २६४ ॥

व्यक्तस्वभावमधुर स्मरलोलितलोचन ।
गोपीमनोहरापाङ्ग गोपिकाशतयूथप ॥ २६५ ॥

वैजयन्तीस्रगाकल्प शरच्चन्द्रनिभानन ।
यमुनापुलिनासीन गोपीरमण पाहि मां ॥ २६६ ॥

जितमन्मथ तन्त्रज्ञ गोपीमानविवर्धन ।
गोपिकातिप्रसादार्थकृतान्तर्धानविभ्रम ॥ २६७ ॥ (नमः ६५)

इति दशमस्कन्धे ऊनत्रिंशोऽध्यायः ॥

जय गोपीगणान्विष्ट वृक्षसंस्पृष्टदर्शन ।
तुलसीमालतीमल्लियूथिकापृष्टवीक्षण॥ २६८॥

क्षित्युत्सवसमालोकसम्भावितसमागम ।
एणीपृष्टाङ्घ्रिपापृष्टलतोत्पुलकसूचित॥ २६९॥

उन्मत्तीकृतगोप्यौघ गोपिकानुकृतेहित ।
जय गोपीगणाविष्ट स्वभावापितगोपिक॥ २७०॥

गोपीलक्षितपादाब्जलक्ष्ममार्गितपद्धते ।
अन्यस्त्रीयुक्तपादाब्जचिह्नेक्षागोपिकार्तिद॥ २७१॥ (नमः ६६)

राधाराधित राधेश राधिकाप्राणवल्लभ ।
राधारमण वन्दे त्वां राधिकाप्रेमनिर्जित॥ २७२॥

राधासंन्यस्तसर्वस्व स्त्रीस्त्रैणगतिदर्शक ।
राधानुतापसंमोहकरान्तर्धानकौतुक॥ २७३॥

सखीगणाप्तराधोक्त तद्विस्मापनचेष्टित ।
राधासहितगोपस्त्रीमुहुर्मार्गित पाहि माम्॥ २७४॥ (नमः ६७)

इति दशमस्कन्धे त्रिंशोऽध्यायः ॥

पुनः पुलिनसंप्राप्त गोपीगीतार्थितोदय ।
जन्ममात्रव्रजश्रीद स्वजनान्वेषणार्तिद॥ २७५॥

दृगब्जहन्यमानस्त्रीवधनिःशङ्कहृदय ।
विषादिनानादुःखघ्न स्वीयार्तिज्ञान्तरात्मदृक्॥ २७६॥

विश्वरक्षार्थसञ्जात भक्ताभयदहस्त हे ।
स्वजनप्रार्थ्यसंस्पर्श नानागुणपदाम्बुज॥ २७७॥

मनोज्ञमधुरालाप दासीगणविमोहन ।
श्रुतिमङ्गलसन्तप्तप्राणार्थदकथामृत॥ २७८॥

मनःक्षोभकमाधुर्य मृदुलाङ्घ्रि वनाटक ।
युगायितवियोगाणो मनोहृदधरामृत॥ २७९॥

सर्वत्यागार्थितगते महामोहनरूप हे ।
व्रजमङ्गलकृद्व्यक्ते स्वजनप्रार्थ्यपूरक॥ २८०॥

अतिकोमलपादाब्जकण्टकारण्यसञ्चर ।
गोपस्त्रीजीविताकर्षिदुर्गभुभ्रमणाव माम्॥ २८१॥ (नमः ६८)

इति दशमस्कन्धे एकत्रिंशोऽध्यायः ॥

अत्युच्चगोपिकादुःखरोदनोन्मथितेन्द्रिय ।
जय गोपीपुनर्दृष्टस्मयमानमुखाम्बुज॥ २८२॥

श्रीमन्मदनगोपाल पीतकौशेयवस्त्रधृक् ।
प्रीत्युत्फुल्लाक्षगोपस्त्रीवेष्टित प्राणदायक॥ २८३॥

वल्लवीस्तनसक्ताङ्घ्रि गोपीनेत्राब्जषट्पद ।
गोपस्त्रीविरहार्तिघ्न वल्लवीकामपूरक॥ २८४॥

गोपीचेलाञ्चलासीन गोपीगणसभाजित ।
जय गोपीसदोजाताधिकश्रीराजमान हे॥ २८५॥ (नमः ६९ )

विदग्धगोपिकागाढत्रिप्रश्नोत्तरदायक ।
विज्ञातगोप्यभिप्राय महाचतुरसिंह हे॥ २८६॥

स्ववाक्स्वाप्ताकृतज्ञत्वादिदोषपरिहारक ।
निजासाधारणप्रेमकारुण्यस्थापकाऽव मां॥ २८७॥
स्वीयसङ्गापरित्यागिन् स्वदानातृप्तमानस ।
प्रियोपकारसंव्यग्र विरहप्रेमवर्धन॥ २८८॥ (नमः ७० )

इति दशमस्कन्धे द्वात्रिंशोऽध्यायः ॥

गोपीविरहसन्तापहरालिङ्गनकोविद ।
रासक्रीडारसाकृष्ट जय गोपीप्रियङ्कर॥ २८९॥

रासोत्सवसमारम्भिन् गोपीमण्डलमण्डित ।
गोपीहेममणिश्रेणीमध्यमध्यहरिन्मणि॥ २९०॥

स्वस्वपार्श्वस्थितिज्ञानानन्दितस्त्रीगणावृत ।
देवतागणगीतादिसुसेवित नमोऽस्तु ते॥ २९१॥

गोपिकोद्गीतसुप्रीत नृत्यगीतविचक्षण ।
स्वात्मास्यदत्तताम्बूल श्रान्तगोपीधृतांसक॥ २९२॥

स्वानुरूपव्रजवधूनृत्यगीतादिहर्षित ।
विमोहितशशाङ्कादिस्थैर्यरात्र्यतिदैर्घ्यकृत्॥ २९३॥

विदग्धवल्लवीवृन्दरतिचिह्नाङ्किताङ्ग हे ।
रतिश्रान्तव्रजवधूमुखमार्जनतत्पर॥ २९४॥ (नमः ७१)

जलक्रीडातिकुशल स्वमालालिकुलावृत ।
सहासगोपिकाव्रातसिच्यमान नमोऽस्तु ते॥ २९५॥

यमुनाजललीनाङ्ग कालिन्दीकेलिलोलित ।
यमुनातीरसञ्चारिन् कृष्णाकुञ्जरतिप्रिय॥ २९६॥

जय श्रीराधिकासक्त जय चन्द्रावलीरत ।
पद्मास्यपद्मपानाले ललितापाङ्गलालित॥ २९७॥

विशाखार्थविशेषार्थिन् श्यामलारतिनिर्मल ।
भद्राभद्ररसाधीन धन्याप्राणधनेश्वर॥ २९८॥

गोपजन्मागतस्वस्त्रीनिरन्तरविलासकृत् ।
गोपीलम्पट हे गोपीस्तनकुङ्कुममण्डित॥ २९९॥ (नमः ७२)

परिक्षित्पृष्टरासार्थ शुकोक्तैश्वर्यसञ्चय ।
मुमुक्षुमुक्तभक्तार्थसच्चिदानन्दचेष्टित॥ ३००॥

गोपीमहामहिमद गोपासूयाद्यनास्पद ।
गोपार्पितगृहापत्यपत्नीप्राण प्रसीद मे॥ ३०१॥ (नमः ७३)

इति दशमस्कन्धे त्रयस्त्रिंशोऽध्यायः ॥

जयाम्बिकावनप्राप्त सारस्वतजलाप्लुत ।
निजपादाम्बुजस्पृष्टनन्दग्राहिमहोरग॥ ३०२॥

विद्याधरेन्द्रशापघ्न जय नन्दविमुक्तिद ।
श्राविताहिपुरावृत्त सुदर्शनविमोचन॥ ३०३॥ (नमः ७४)

कामपालसहक्रीडासम्मानितनिशामुख ।
मनोहरमहागीतमोहितस्त्रीगणावृत॥ ३०४॥

शङ्खचूडपरित्रस्तगोपिकाक्रोशधावित ।
स्त्रीरक्षास्थापितबल शङ्खचूडशिरोहर॥ ३०५॥

शङ्खचूडशिरोरत्नप्रीणिताग्रज पाहि मां ।
अन्योन्यगोपीसापत्न्यानुत्पादक नमोऽस्तु ते॥ ३०६॥ (नमः ७५)

इति दशमस्कन्धे चतुस्त्रिंशोऽध्यायः ॥

अहविरहसन्तप्तगोपीगीतगुणोदय ।
जय शोकाब्धिनिस्तारप्रकारात्युच्चकीर्तन॥ ३०७॥

साचीकृताननाम्भोज व्यत्यस्तपदपल्लव ।
नर्तितभ्रुयुगापाङ्ग वेणुवाद्यविशारद॥ ३०८॥

विश्वमोहनरूपं त्वां सिद्धस्त्रीकामवर्धनं ।
वन्दे चित्रायिताशेषव्रजारण्यपशुव्रजम्॥ ३०९॥

अवाहितप्रवाहौघ लतादिमधुवर्षक ।
स्वपार्श्वापितहंसादे पर्जन्यच्छत्रसेवित॥ ३१०॥

ब्रह्माद्यतर्क्यसङ्गीत कामार्पकसमीक्षण ।
स्वपदोद्धृतभूताप वनितातरुभावकृत्॥ ३११॥

हृतचित्तमृगीप्राप्तदिनान्तश्रान्तिकान्तित ।
यमुनास्नानरम्याङ्ग सुखवायुप्रपूजित॥ ३१२॥

ब्रह्मादिवन्द्यमानाङ्घ्रे सुहृदानन्दवर्धन ।
मदच्छुरितलोलाक्ष मुदिताननपङ्कज॥ ३१३॥

वनमालापरीताङ्ग गजेन्द्रगतिसुन्दर ।
गोपिकाश्रावितोत्कर्ष हृष्टमातृक पाहि मां॥ ३१४॥ (नमः ७६ )

इति दशमस्कन्धे पञ्चत्रिंशोऽध्यायः ॥

अरिष्टत्रासिताशेषव्रजाश्वासक रक्ष मां ।
स्वभुजास्फोटनाह्वान वृषभासुरकोपन॥ ३१५॥

उत्पाटितविषाणाग्रघातितोग्रवृषासुर ।
गोकुलारिष्टविध्वंसिन् अरिष्टासुरभञ्जन॥ ३१६॥ (नमः ७७ )

नारदज्ञापितोदन्तकंसदुर्मन्त्रवर्धन ।
कंससंप्रार्थिताक्रूरपुरानयन पाहि मां॥ ३१७॥

दुष्टोपायदुरोद्योगशताकुलितकंसराट् ।
राजाज्ञानन्दिताक्रूर जय दानपतिप्रिय॥ ३१८॥ (नमः ७८ )

इति दशमस्कन्धे षड्विंशोऽध्यायः ॥

जय गोकुलसंत्रासिकेशिविक्षेपण प्रभो ।
हयासुरमहास्यान्तःप्रवेशितमह्अँ[३क]भुज॥ ३१९॥

हेलाहतमहादिअत्य जय केशिनिसूदन ।
केशवं केशिमथनं वन्दे त्वां देवर्चितं॥ ३२०॥ (नमः ७९ )

जय भागवतश्रेष्ठश्रीनारदसमीडित ।
अपरिच्छिन्नसन्मूर्ते सर्वजीवेश्वरेश्वर॥ ३२१॥

सृष्टिस्थित्यन्तकृन्मायागुणसृक् सत्यवाञ्छित ।
ऋषिवाक्स्मृतदेवार्थकंससंहरणादिक॥ ३२२॥

नारदज्ञापिताशेषकार्यस्वीकारकोविद ।
दर्शनोत्सवसंहृष्टश्रीनारदनमस्कृत॥ ३२३॥ (नँमः ८० )

हे मेषायितगोपालपालनस्तेयविभ्रम ।
गोपवेशधरव्योमचौर्यनीतसुहृद्गण॥ ३२४॥

दुष्टव्योमासुरग्राहिन् जय व्योमनिपातन ।
मयपुत्रगुहारुद्धगोपवर्गविमोक्षक॥ ३२५॥ (नमः ८१ )

इति दशमस्कन्धे सप्तत्रिंशोऽध्यायः ॥

जय दानपतिध्यातमहामहिमसञ्चय ।
सल्लक्षणार्थसद्वाग्याक्रूरसम्भावितेक्षण॥ ३२६॥

पादाब्जध्यायकाक्रूरलालसानन्दवर्धन ।
अक्रूररथसण्प्राप्त गोष्ठगोदोहनागत॥ ३२७।

जय दानपतीक्षाप्त क्षितिकौतुककृत्पद ।
श्वाफल्किलुठनाधानपादाम्बुजरजोव्रज॥ ३२८॥

जय श्वफल्कतनयनयनानन्दवर्धन ।
रथावप्लाविताक्रूर जयाक्रूराभिविन्दित॥ ३२९॥

सुप्रीतालिङ्गिताक्रूर जय प्रणतवत्सल ।
गान्दिनीनन्दनाशेषमनोवाञ्छितपूरक॥ ३३०॥ (नमः ८२)

इति दशमस्कन्धे अष्टात्रिंशोऽध्यायः ॥

अक्रूरवर्णिताशेषकंससुर्वृत्त कोपित ।
देवकीवसुदेवादिदुःखश्रवणदुःखित॥ ३३१॥

यात्रामन्त्रितगोपेश मथुरागमनोन्मुख ।
प्रातर्मधुपुरीयानश्रवणाकुलगोकुल॥ ३३२॥

यशोदाहृदयाशङ्काचिन्ताज्वरशतप्रद ।
शोकब्धिपातिताशेषव्रजयोषिद्गणाऽव मां॥ ३३३॥

शून्यायमानजगतीगोपीजीवनतापन ।
गोपीरोदनवार्द्धारासंवर्धितनदीगण॥ ३३४॥ (नमः ८३)

जयाक्रूररथारूढ गोपीरोदनकातर ।
शकटारूढनन्दादिगोपालगणवेष्टित॥ ३३५॥

गोपीवियोगसन्तप्त राधिकाविरहासह ।
स्वदूतप्रेमिष्टोक्तिगोपिकाश्वासनाकुल॥ ३३६॥

गोपीहाहामहारावरोदनार्तिनिवर्तित ।
मृतप्रायव्रजवधूचुम्बनालिङ्गनासुद॥ ३३७॥

प्रसीद सान्त्वनाभिज्ञ नानाशपथकारक ।
कृतावधिदिनो जीया आशाप्राणप्रदायक॥ ३३८॥ (नमः ८४)

श्वाफल्किसञ्चालितयानवाहं
गोपाङ्गनासंवृतयानमार्गम् ।
धात्रीमहारोदनदुःखितं त्वां
निर्वाक्यनन्दादिधृतं नमामि॥ ३३९॥

मारितस्त्रीकतिपय कतिस्त्रीमूर्छनाकर ।
उन्मादितैकतद्यूथ रोदितस्त्रीसहस्रक॥ ३४०॥

महार्तस्वरसंभग्नकण्ठीकृतवधूशत ।
प्रसीद रथमागाङ्कपातितैकाबलागण॥ ३४१॥

जयाशातन्तुबद्धासुकतिस्त्रीकीर्तनप्रद ।
मथुरापदवीवीक्षाकुलितैकाङ्गनायुत॥ ३४२॥ (नमः ८५)

यमुनामज्जिताक्रूर जयाकूररथस्थित ।
श्वाफल्किजलसंदृष्ट परमाश्चर्यदर्शक॥ ३४३॥

इति दशमस्कन्धे एकोनचत्वारिंशोऽध्यायः ॥

अक्रूरसंस्तुतानादे पद्मनाभादिकारण ।

जगद्दुर्विज्ञेयगते भजनानैकगम्य हे॥ ३४४॥

नानायज्ञार्चनीयाङ्घ्रे नानाख्यारूपमार्गभाक् ।
सर्वगत्यापगाम्भोधे सर्वदेवमयेश्वर॥ ३४५॥

जगदाश्रयसर्वाङ्ग ब्रह्माण्डालिगुहोदर ।
शोकघ्नानन्दद श्रीमदवतारावलीयशः॥ ३४६॥

नानाकार्पण्यविज्ञापितमुमुक्ष्वक्रूरयाचित ।
स्वप्रेमभक्तिसत्सङ्गदायिस्वैककृपाभर॥ ३४७॥

गोप्यवज्ञाहताक्रूरशुष्कस्तोत्राभिवन्दित ।
पितृव्यविस्मयोदन्तप्रच्छकाद्भुतसागर॥ ३४८॥ (नमः ८६)

इति दशमस्कन्धे चत्वारिंशोऽध्यायः ॥

मथुरोपवनप्राप्तनन्दादिस्वजनावृत ।
व्रजार्तिकारणाक्रूरगृहयानार्थनाकर॥ ३४९॥

स्वलङ्कृतमहाश्चर्यपुरीदर्शनहर्षित ।
पुरस्त्रीवृन्दनयनमनोहर नमोऽस्तु ते॥ ३५०॥

दध्यादिमङ्गलद्रव्यद्विजातिकृतपूजन ।
पुरस्त्रीकृतगोपस्त्रीपुण्यश्लाघातिनिर्वृत॥ ३५१॥ (नमः ८७)

मथुराजनसंवीक्ष्य रजकांशुकयाचक ।
दुर्मुखाक्षेपसंक्रुद्ध रङ्गकारशिरोहर॥ ३५२॥

निजप्रियाम्बरद्वन्द्वपरिधानविभूषित ।

अभीष्टवस्त्रसंहृष्टरामगोपालिसंयुत॥ ३५३॥

प्रसीद वायकोन्नीतचैलेयाकल्पभूषित ।
नानालक्षणवेशाढ्य हे वायकवरप्रद॥ ३५४॥ (नमः ८८)

प्रसीद हे सुदामाख्यमालाकारगृहागत ।
मालिकप्रीतिपूजाप्तमाल्यवद्भक्तिसंस्तुत॥ ३५५॥

सुगन्धिनानामालालिस्वलङ्कृत नमोऽस्तु ते ।
सुदामाभीप्सितवरवाञ्छातीतवरप्रद॥ ३५६॥ (नमः ८९)

इति दशमस्कन्धे एकचत्वारिंशोऽध्यायः ॥

सहासनर्मसंप्रश्नार्थितकुब्जानुलेपन ।
कुब्जादत्ताङ्गरागाढ्य सैरिन्ध्रीचित्तमोहन॥ ३५७॥

कुब्जानुलिप्तसर्वाङ्ग हेऽङ्गरागानुरञ्जित ।
त्रिवक्रावक्रताहर्तः कुब्जासौन्दर्यदायक॥ ३५८॥

कुब्जाकृष्टाम्बरधर कुब्जाचेष्टातिहासित ।
कृतकुब्जासमाश्वास जय कुब्जावरप्रद॥ ३५९॥ (नमः ९०)

नानोपायनताम्बूलगन्धादिवणिगर्चित ।
जय चित्रायिताशेषपुरस्त्रीगणवीक्षक॥ ३६०॥

जय प्रफुल्लनयन लीलाहसितलोचन ।
मत्तनागेन्द्रगमन नागरीगणमोहन॥ ३६१॥

धनुःस्थानप्रश्नकर जयाद्भुतधनुर्धर ।

लीलासज्जीकृतेष्वास कंसकोदण्डखण्डन॥ ३६२॥

धनूरक्षकवृन्दघ्न कंसप्रेषितसैन्यहन् ।
कंसातित्रासजनक शकटावाससङ्गत॥ ३६३॥ (नमः ११)

इति दशमस्कन्धे द्विचत्वारिंशोऽध्यायः ॥

कंसकारितमल्लौघ रङ्गभूगमनोत्सुक ।
जीयात् कुवलयापीडगजरुद्धपथो भवान्॥ ३६४॥

संक्रुद्धाम्बरष्ठनिर्दिष्ट करीन्द्रक्रीडिताऽव मां ।
सद्यः कुवलयापीडघातिन् सिंहपराक्रम॥ ३६५॥

समुत्पाटितनागेन्द्रमहादन्तवरायुधं ।
वन्दे कुवलयापीडमर्दनं हतहस्तिपम्॥ ३६६॥ (नमः १२)

रङ्गप्रवेशसुभगवीरश्रीपरिभूषित ।
स्कन्धन्यस्तमहादन्त मदरक्तकणाङ्कित॥ ३६७॥

प्रसीद स्वेदकणिकालङ्कृताननपङ्कज ।
रङ्गस्थलोकाभिप्रायभाताशेषरसात्मक॥ ३६८॥

महावीर महारम्य महास्मर महासुहृत् ।
महेश्वर महास्निग्ध महाकाल महागुरो॥ ३६९॥

महातत्त्व महासेव्य सर्वलोकमनोहर ।
सप्रेमेक्षकमञ्चस्थलोकगीतमहायशः॥ ३७०॥ (नमः १३)

चानूरभाषितं वन्दे चानूरोत्तरदायकं ।

चानूरातिपराक्रान्तं मल्लयुद्धविशारदं॥ ३७१॥ (नमः १४)

इति दशमस्कन्धे त्रिचत्वारिंशोऽध्यायः ॥

सहजप्रेममृदुल पुरस्त्रीगणशोचित ।
पुरस्त्रीनिन्दिताशेषसम्यलज्ञातिलज्ञित॥ ३७२॥

स्त्रीगणोद्गीतमहिमव्रजस्त्रीश्रुतिहर्षित ।
पितृमातृमहार्तिघ्न जय चानूरमर्दन॥ ३७३॥

शलतोषलसंहर्तर्बलघातितमुष्टिक ।
विद्रावितान्यमल्लौघ रामपातितकूटक॥ ३७४॥

उच्चमञ्चस्थदुर्वृत्तकंसदुर्वाक्यकोपित ।
आत्तासिचर्मसञ्चारिकंसकेशग्रहोद्धत॥ ३७५॥

भूमिपातितभोजेन्द्र कंसोपरिविकूर्दित ।
कंसध्वंसन कंसारे जय कंसनिसूदन॥ ३७६॥

हृतोर्वीभयभारार्ते जगच्छल्यविनाशक ।
पितृमातृप्रहर्षार्थमृतकंसविकर्षक॥ ३७७॥

ब्रह्मेशादिसुरानन्दिन् कालनेमिविमुक्तिद ।
बलघातितदुष्टष्टकंससोदर पाहि मां॥ ३७८॥ (नमः १६)

कंसयोषित्समाश्वासिन्नादिष्टमृतसत्क्रिय ।
पितृमातृ पदानम्र पितृबन्धविमोक्षक॥ ३७९॥ (नमः १७)

इति दशमस्कन्धे त्रिचत्वारिंशोऽध्यायः ॥

ईशज्ञानाकृताशेषजननीतातभाववित् ।
स्नेहवर्धनमिष्टोक्तिपितृमातृप्रमोदकृत्॥ ३८०॥

प्राप्तालिङ्गनमुन्मातृतातक्रोडाधिरोपित ।
स्नेहवाक्पितृमात्रश्रुधारास्नापितमस्तक॥ ३८१॥

परमानन्दित श्रीमद्देवक्यानकदुन्दुभे ।
जय प्रेमसुखाच्छादितज्ञान दुःखनिबारक॥ ३८२॥ (नमः ९८)

सद्वाक्यानन्दितश्रीमदुग्रसेनाधिपत्यद ।
दत्तोग्रसेनराज्यश्रीरुग्रसेननिदेशकृत्॥ ३८३॥

प्रसीदतान्मे भगवान् भक्तवत्सलनामधृक् ।
उग्रसेनवशानीतत्रिलोकीरत्नसञ्चय॥ ३८४॥ ( नमः ९९)

आनीतकंससन्त्रासप्रोषितज्ञातिबान्धव ।
जय सम्मानिताशेषयादवावासदायक॥ ३८५॥

सदा दयास्मितालोकानन्दिताखिलयादव ।
जय रोगजराग्लानिहारिसन्दर्शनामृत॥ ३८६॥

प्रसीद सात्वतश्रेष्ठ यादवेन्द्र प्रसीद मे ।
वृष्णिपुङ्गव मां पाहि दाशार्हाधिप माधव ॥ ३८७॥

कुकुरान्धकवंश्येन्द्र भैमान्वयविवर्धन ।
ययातिकुलपद्मार्क चन्द्रवंशाब्धिचन्द्रमः ॥ ३८८॥ ( नमः १००)

जय श्रीमथुरानाथ मथुरामङ्गल प्रभो ।
मधुरामूर्तमाधुर्य मथुरामण्डलेश्वर ॥ ३८९॥

नित्यश्रीमथुरावासिन् मधुरामाधुरीप्रद ।
हे माथुरमहाभाग्य नमस्ते मथुरापते ॥ ३९०॥ (नमः १०१)

अद्यश्वोगमनव्याजरक्षितव्रजनायक ।
प्रसीद मुहुराश्लेषनन्दसम्भाषणाकुल ॥ ३९१॥

नानावाक्चातुरीदीननन्दरोदनवर्धन ।
अत्यालिङ्गनगोपालकुलदुःखाश्रुवाहक ॥ ३९२॥

मुहुर्मुह्यत्पतद्वृद्धनन्दसान्त्वनकातर ।
वासोऽलङ्कारकुप्यादिदानमारितनन्द हे ॥ ३९३॥

हाहामहारवाक्रन्दिगोपवृन्दात्मशोकद।
जलशेकाद्युपानीतनन्दप्राण प्रसीद मे ॥ ३९४॥

त्वरागमनसत्योक्तिविश्वस्तीकृतनन्द मां।
पार्श्वे रक्ष सुसन्देशयशोदादैन्यवर्धन ॥ ३९५॥

मुहुर्मुहुः परावर्तमाननन्दाश्रुसंप्लुत ।
नन्दानुव्रजनव्याज व्रजदीनजनासुद ॥ ३९६॥

गोप्यर्थप्रेषितस्वीयभूषाशपथवाचिक ।
निरुध्यमाननेत्राब्जवारिधार प्रसीद मे॥ ३९७॥ (नमः १०२)

इति श्रीभागवतम् ॥

श्रीजगन्नाथ नीलाद्रिशिरोमुकुटरत्न हे ।
दारुब्रह्मन् घनश्याम प्रसीद पुरुषोत्तम॥ ३९८॥

प्रफुल्लपुण्डरीकाक्ष लवणाब्धितटामृत ।
गुटिकोदर मां पाहि नानाभोगपुरन्दर॥ ३९९॥

निजाधरसुधादायिन्निन्द्रद्युम्नप्रसादित ।
सुभद्रालालनव्यग्र रामानुज नमोऽस्तु ते॥ ४००॥

गुण्डिचारथयात्रादिमहोत्सवविवर्धन ।
भक्तवत्सल वन्दे त्वां गुण्डिचारथमण्डनं॥ ४०१॥

दीनहीनमहानीचदयार्द्रीकृतमानस ।
नित्यनूतनमाहात्म्यदर्शिन् चैतन्यवल्लभ॥ ४०२॥ (नमः १०३)

श्रीमच्चैतन्यदेव त्वां वन्दे गौराङ्गसुन्दर ।
शचीनन्दन मां त्राहि यतिचूडामणे प्रभो॥ ४०३॥

आजानुबाहो स्मेरास्य नीलाचल विभूषण ।
जगत्प्रवर्तितस्वादुभगवन्नामकीर्तन॥ ४०४॥

अद्वैताचार्यसंश्लाघिन् सार्वभौमाभिनन्दक ।
रामानन्दकृतप्रीत सर्ववैष्णवबान्धव॥ ४०५॥

श्रीकृष्णचरणाम्भोजप्रेमामृतमहाम्बुधे ॥
नमस्ते दीनदीनं मां कदाचित् किं स्मरिष्यसि॥ ४०६॥ (नमः १०४)

नमो ब्राह्मणरूपाय निजभक्तस्वरूपिणे ।
नमः पिप्पलरूपाय गोरूपाय नमोऽस्तु ते॥ ४०७॥

नानातीर्थस्वरूपाय नमो नन्दकिशोर हे ।
सर्वदा लोकरक्षार्थरूपपञ्चकधारिणे॥ ४०८॥ (नमः १०५)

पाषाणधातुमृद्दारुसिकतामणिलेखजा ।
सप्तधा ते प्रतिकृतिरचला वा चला प्रभो॥ ४०९॥

शालग्रामशिला चाथ यत्र कुत्राप्यवस्थिता ।
यादृशी तादृशी वापि भक्तैर्भक्त्याभिपूजिता॥ ४१०॥

भवताधिष्ठिता सर्वदा सच्चिदानन्दरूपिणी ।
त्वमेव कथ्यसे सद्भिस्तस्मै तुभ्यं नमो नमः॥ ४११॥ (नमः १०६)

सर्वशास्त्राब्धिपीयूष सर्वदेवैकसत्फल ।
सर्वसिद्धान्तरत्नाढ्य सर्वलोकैकदृक्प्रद॥ ४१२॥

सर्वभागवतप्राण श्रीमद्भागवतप्रभो ।
कलिध्वान्तोदितादित्य श्रीकृष्णपरिवर्तित॥ ४१३॥

परमानन्दपाठाय प्रेमवर्ष्यक्षराय ते ।
सर्वदा सर्वसेव्याय श्रीकृष्णाय नमोऽस्तु मे॥ ४१४॥

मदेकबन्धो मत्सङ्गिन् मद्गुरो मन्महाधन ।
मन्निस्तारक मद्भाग्य मदानन्द नमोऽस्तु ते॥ ४१५॥

असाधुसाधुतादायिन्नतिनीचोच्चताकर ।
हा न मुञ्च कदाचिन्मां प्रेम्णा हृत्कण्ठयोः स्फुर॥ ४१६॥ (नमः १०७)

श्रीकृष्ण तव कारुण्यमहिम्ने मे नमो नमः ।
यो मां नीचं दुराचारं नित्यपापरतं शठम्॥ ४१७॥

अहो तस्या अवस्थायाः सतामिव दशामिमां ।
तस्मात्स्थानादिदं स्थानं मथुरामण्डलं शुभम्॥ ४१८॥

यस्मिन् ज्ञानकृतं वापि सर्वपापं न तिष्ठति ।
चतुर्धा यत्र मुक्तिः स्यात्त्वं च सन्निहितः सदा॥ ४१९॥

यस्मिन् स्वसन्महिम्नैवार्पितो वससि नित्यदा ।
निजमाधुर्यसम्पत्त्या मधुरेति यदुच्यते॥ ४२०॥

तथा तस्माच्च दुःसङ्गाद्यस्त्वत्प्रियतमस्य हि ।
श्रीमच्चैतन्यदेवस्य सङ्गं नीलाचले तथा॥ ४२१॥

रथोपरि तव श्रीमन्मुखदर्शनकौतुकं ।
पुनर्वृन्दावनं ह्येतत् तत्तत्क्रीडास्पदं तव॥ ४२२॥

गोपिका यस्य सत्कीर्तिं भवांश्चावर्णयन् गुणान् ।
दूरस्थाः श्रवणाद्यस्य लभन्ते प्रेम ते शुभाः॥ ४२३॥

चराचरं प्राणिजातं यस्य त्वत्प्रेमसंप्लुतं ।
नित्यमद्यापि यस्मिंस्त्वपूर्ववत् क्रीडसि स्फुटं॥ ४२४॥

अत्रैव त्वत्प्रियं यश्च मदेकधनजीवनं ।
प्रापयन् मे पुनः सङ्गं तस्मै नित्यं नमो नमः॥ ४२५॥

अधुना यो मम मुखान्निःसारयति नाम ते ।
कदाचिच्चरणाम्भोजं हृदि मे स्मारयत्यपि॥ ४२६॥

मत्कायेनाधमेनापि नमस्ते कारयेदयं ।
सर्वापद्भ्योऽपि मां रक्षेद्दद्यात्ते भक्तिसम्पदम्॥ ४२७॥

दातुं शक्नोति मेऽजस्रं प्रेमस्मर्णकीर्तनं ।
तव प्रेमकटाक्षञ्च मयि प्रापयितुं क्षमः॥ ४२८॥

गोगोपगोपिकासक्तं त्वां च दर्शयितुं प्रभुः ।
एवं यो मम हीनस्य सर्वाशालम्बनं परम्॥ ४२९॥

महाकारुण्यमहिमा पुराणो नित्यनूतनः ।
त्वदीयः सच्चिदानन्दस्तस्मै नित्यं नमो नमः॥ ४३०॥

एतल्लीलास्तवं नाम स्तोत्रं श्रीकृष्ण तारकं ।
प्रणामाष्टोत्तरशते योऽर्थावगमपूर्वकं॥ ४३१॥

कीर्तयेत् सोऽचिराद् भक्तो लभतां कृपया तव ।
रूपे नामनि लीलायामाक्रीडेऽपि परां रतिम्॥ ४३२॥ (नमः १०८)

इति श्रीकृष्णलीलास्तवनामस्तोत्रं समाप्तम् ॥